श्रीरस्तु

# लक्ष्मीस्तुतिमञ्जरी

श्री जग्गु वकुलभूषणकवेः कृतिः

विवरणकर्ता

श्री. न. च. रघुनाथाचार्यः

श्रीरस्तु

# लक्ष्मीस्तुतिमञ्जरी

श्री जग्गु वकुलभूषणकवेः कृतिः

विवरणकर्ता

श्री. न. च. रघुनाथाचार्य

श्रीमते हयग्रीवाय नमः
श्रीमते रामानुजाय नमः

# लक्ष्मीस्तुतिमंजरी

(श्रीयदुशैलवासि - विद्याविशारद - बालधन्वि - जग्गु वकुलभूषण - महाकविविरचिता सव्याख्या ॥ )

श्लो— कल्याणं नः कलयतु पदं मंजुलं मंजरीभि -
मंजीराणां जलधिदुहितु र्धिक्कृताम्भोजशोभम् ।
नित्यं विष्णो र्यदतिमसृणस्फीतगारुत्मताभं
वक्षःपीठं नखरकिरणै श्शारवर्णं तनोति (१)

(विवरणकर्ता श्री न. च. रघुनाथाचार्यः एकशिलानगरस्थः)

व्याख्या— १. नानासत्काव्यनिर्माता – जग्गूवकुलभूषणः ।
भक्त्या स्तौति रमां श्लोकैः – कुर्वे तद्विवृतिं लघुम् ॥

२. प्रसीदतु सरस्वती मयि मतिं शुभां तन्वती
तरंगयतु मंगलं सकरुणै रपांगै रमा ।
श्रियश्खलु दया फलं, विबुधरंजनं वा कवेः
भवामि विवृतिच्छलादिह समानभागी फले ॥

तत्र भवान् श्रीवकुलभूषणकविः त्रिंशता मधुरैः पद्यैः मंगलदेवतां तुष्टूषुः स्वकृतेरादौ मंगल निबध्नाति "कल्याणंनः" इति ॥ पाठकानपि आत्मना सह क्रोडीकृत्य "कल्याणं नः कलयतु" इत्याशंसनं कवेः औदार्यमभिव्यनक्ति। मंजीराः पादनूपुरविशेषाः रत्नप्रभारंजिताः । तत्प्रभाश्च पुष्पगुच्छवन्मनोहारितया मंजरीशब्देन विशेषिताः । ताभिः मंजुलं-मनोहरं जलधिदुहितुः पदम् । अतएव धिक्कृताम्भोजशोभम् । पद्मशोभामतिशय्य वर्तते । इदं पदमेव नः कल्याणकलने कर्तृ ॥ अथ उत्तरार्धेन एतत्पदविन्यासोचितं पीठमुपश्लोकितम् । गारुत्मतमणिसवर्णवर्णं विपुलं च विष्णोः वक्षस्स्थलं अस्य पदस्य नित्यनिवेशपीठमिति कथनात् एतत्प्रभावातिशयो व्यज्यते, जगतः

प्रभविष्णुना विष्णुनापि नित्यं वक्षसि प्रेम्णा ध्रियमाणमिति । एवं स्वतो हरितवर्णमपि तत् वक्षःपीठं एतत्पदनखरकिरणैः अरुणैस्संवलितं शारवर्णं चित्रवर्णमिव भवतीति मंगलपद्यार्थः । "मंजुलं मंजीरीभिर्मंजीराणा" मिति श्रुतिमनोहरपदविन्यासोऽनुप्रासः । इदं मन्दाक्रान्तावृत्तम् । इह स्तुतौ आदौ मन्दाक्रान्ता, तदनु पृथ्वी चेति वृत्तयोः क्रमानुसरणं कवेः । एतादृशचमत्कृतेः श्लेषेणाविष्करणं ३२ पद्ये सुगमम् ॥

श्लो– कटाक्षलहरी तु ते नयनकोणकुल्यानुगा
दरिद्रजनतोषरं प्रमृततापचण्डातपम् ।
सुवर्णधनशालिकं विदधती मुकुन्दप्रिये !
समस्तजनतार्थ्यतां नयतु नाकनाथार्चिते !! (२)

यथाशक्ति ऊर्जस्वलाभिर्वाग्भिः महिमवर्णनमेव हि स्तुतिः । अथ इतः प्रभृति देव्याः प्रभाववर्णन मारभते "कटाक्षलहरी" इत्यादिना । जल-निस्सरणाय निखाता अल्पा सरित्–कुल्या । नाकनाथेन इन्द्रेण अभ्यर्चिते! मुकुन्दप्रिये! लक्ष्मि! तव नेत्रप्रान्तः निस्सरन्त्याः कटाक्षलहर्याः कुल्यायितः । दरिद्रजनता च मादृशी ऊषरं क्षारमृत्तिकामयं क्षेत्रमिव । तत्रापि तापत्रयेण चण्डातपेनेव संतप्तमिदं क्षेत्रम् । उक्तकुल्यातः प्रसृता ते शिशिरा कटाक्षजलधारा क्षेत्रमिदं आसमन्तात् सिंचतु । तेन च मादृक्ष ऊषरक्षेत्रेपि सुवर्णधनाभिन्नं शालिधान्यं फलतु । "धान्येन धनवा" निति-वत् अभेदव्यवहारः । सुवर्णधनं शालिधान्यं च फलतु इति वार्थः । ईदृशसमृद्ध्या यथा वयं समस्तजनतया अभ्यर्थनीयाः स्याम, तथा अवि-च्छिन्नो भवदनुग्रह स्सम्पद्यतामिति भावः । कटाक्षाणां लहरीत्वेन रूप-णात्, नेत्रप्रान्ते कुल्यात्वं दरिद्रजनतायां ऊषरत्वं, तापत्रये चण्डातपत्वं, सुवर्णधने शालिधान्यत्वं च, क्रमेण निरूपितमिति समस्तवस्तुविषयं सावयवरूपकमिदम् । चतुर्थपादे "जनताऽर्थ्यतां" इत्यत्र "जगदर्थ्यता"मिति जगतार्थ्यतामिति वा, पाठस्साधीयान् । "नैकं पदं द्विः प्रयोज्यम्" इति हि वामनः । पृथ्वीवृत्तम् ॥

श्लो– ज्ञातं तत्वं सुदृढमधुना त्वत्कटाक्षास्तु दक्षाः ।
जीमूताभद्विपघनघटादानवारिप्रवाहम् ।
वर्षन्त्युच्चैः स्सुकृतिसदनद्वारि वारीशकन्ये !
यस्मादम्ब! त्वमनवरतं दानवारिप्रियाऽसि ॥ (३)

देव्याः कटाक्षपातात् गजान्तमैश्वर्यं भवतीति प्रतिपाद्यते "ज्ञातं तत्व" मित्यादिना ।

हे वारीशकन्ये! क्षीराम्बुधेस्तनये! अम्ब! त्वत्कटाक्षाणां महिम्नः तत्त्वं अधुना सम्यगज्ञासिषम् । ये सुकृतिनस्त्वामुपासते, तेषां भवनद्वारि सानुग्रहभवत्कटाक्षसम्पातात् आविर्भूतेन सुमहता ऐश्वर्येण नीलनीरदसन्निभाः भद्रगजानां घटाः समूहाः आबद्धा भवन्ति । एवं ते गजाश्च तत्र अनवरतं दानवारीणां मदजलानां प्रवाहं वर्षन्ति । तेन गजमदजलप्रवाहेण त्वद्भक्त-भवनद्वारभूमिः समन्तात् आर्द्रीभवतीति भावः । अत्र वस्तुतः गजानामेव-दानवारिवर्षुकत्वेऽपि, प्रयोजक कर्तृषु कटाक्षेषु (कटाक्षाः वर्षन्तीति) साक्षाद्दानजलवर्षुकत्वारोपणं उक्तिचमत्कारः । तदुपबृंहितः चतुर्थपादार्थः । मातः! त्वं हि दानवारिप्रिया भवसि । अत एव त्वत्कटाक्षाः भक्तानां भवनांगणें दानवारि वर्षन्तीति। गजमदजलप्रिया त्वं इति आपातप्रतिपन्नोर्थः। दानवानां अरिः विष्णुः । तस्य प्रिया असीति परमार्थः । एवं अर्थद्वयस्य शब्दश्लेषभित्तिकाभेदाध्यवसायेन प्रकृतस्य समर्थनम् । किंच, लक्ष्म्या विभूतिषु गजलक्ष्मीति च एका विभूतिः । तत्र पद्मनिषण्णा देवी उभयतः भद्रगजैः स्वस्वशुण्डापरिगृहीतकनककलशैः स्वदानजलसम्पृक्तेन दिव्य-वारिणा नित्यमभिषिच्यत इति वा सा देवी दानवारिप्रिया भवतीति भाव्यम्। यद्वा, दानं-वितरणम् । द्विपघनघटायाः दानमिति कर्मणि षष्ठ्या समासः! तथा च, त्वत्कटाक्षपात्रभूतास्सुकृतिनः अर्थिभ्यो द्विपघटा अपि वारि-विसर्गपूर्वकं ददतीति, तादृशदानजलेन सुकृतिनां भवनद्वाराणि आर्द्रीभवन्तीति तदीयमैश्वर्यवैभवं व्यंग्यम् ॥

श्लो— वनीपकमिहावनीपकमहो! जनं तन्वती<br>
सितेतरसरोरुहद्युतिनिभाक्षिकोणप्रभा ।<br>
कलिन्दगिरिनन्दिनी तटनिरूढशीतं यथा<br>
सभुन्नमयति क्षणान्नमयति प्रवाहै रमे!! (४)

"वनीपक" मिति, हे रमे! महदिदमाश्चर्यम् । किमितिचेत्- नीलसरोरुहरुचिरुचिरा त्वत्कटाक्षच्छटा यस्मिन् जने पतति, सः वनीपकोऽपि क्षणात् अवनीपको भवतीति । वनं.पकः याचकः । सः असः भवतीति विरोधः । अवनीं पातीति अवनीपः । स एव अवनीपकः । स्वार्थे कप् । त्वत्कटाक्ष पातो याचकमपि भूपालकं तनोतीति त्वत्प्रभावातिशयभावनात् अविरोधः।

अथात्र उपमा प्रदर्श्यते उत्तरार्धेन। कलिंदगिरिनन्दिनी-यमुना। शीतः वेतसः। "अथवेतसे ...... शीतवनीरवंजुलाः" इत्यमरः। यमुना यथा स्वप्रवाहस्य अन्वयव्यतिरेकाभ्यां वेतसं नमयति, उन्नमयति च, तथा त्वत्कटाक्षोऽपि स्वप्रसारवलेन पूर्वं दारिद्र्यभारावनतमपि उन्नमयति। स्व-संकोचे सति पूर्वमुन्नतमपि नमयति च। लोके जनस्य ये नति-उन्नती दृश्येते त्वत्कटाक्षस्य न्यंचितोदंचिताभ्यामेव भवतः, इति भावः। अत्र उपमा विरोधाभासयोः अंगांगिभावतः सांकर्यम्। "एको मुक्तातपत्र ...." इत्यादि श्रीगुणरत्नकोशश्लोकोऽत्र अनुसन्धेयः॥

अत्रेदं विचार्यम्- श्लोके "सरोरुहद्युत्या सदृशी सरोरुहद्युतिनिभा" इति अस्वपदविग्रहेण नित्यसमासो बोध्यः। "अथ स्युरुत्तरपदेत्वमी-निभसंकाशनीकाशप्रतीकाशोपमादयः" इत्यमरकोशात्। समतुल्यसदृशादि-शब्दाः व्यस्ताः समस्ता वा समानवस्तुवाचिनः। निभसंकाशादयस्तु समासे उत्तरपदत्वं प्रतिपद्यैव सदृशवाचका इति। तेन निभादिशब्दानां व्यस्तत्वे सदृशार्थकत्वविरहात्, द्युत्या सदृशी द्युतिनिभा इति अस्वपदेनैव विग्रह इति स्थितम्। मल्लिनाथस्तु, माघकाव्ये १ सर्गे २२ श्लोके "प्रफुल्लतापिंछनिभै"रित्यत्र इत्थमेव व्याचक्षाणोऽपि, मेघसन्देशे २ सर्गे "खद्योतालीविलसितनिभा" मित्यत्र तद्विरुद्धं "खद्योतालीविलसितेन स्फुरणेन निभां समानां" इति व्याख्यातवानिति विमृश्यम्।

श्लो- कर्षन्त्यम्ब! क्षुदभिशिथिला बालका लोलनेत्राः
जीर्णं वस्त्रं कलहगलितप्राज्यलज्जा च जाया।
लूतास्यूतप्रगुणपटलोल्लोचजाला च शाला
सर्वं कष्टं प्रभवति नृणां त्वत्कटाक्षे सुदूरे॥ (५)

उक्तं पूर्वं श्लोकैः लक्ष्मीकटाक्षलाभस्य फलम्। तदभावात् जने यादृशी दुर्दशा, तामिह वर्णयति कर्षन्तीति॥ अम्ब! नृणां त्वत्कटाक्षे सुदूरे सति, सर्वमेव कष्टमधिकरोति तद्गृहेषु। अशितुमाहारः वसितुं वासो वा न तेषां पर्याप्तः। जीर्णवाससं गृहपतिं बुभुक्षापीडिताः लोलाक्षा बालकाः तस्य परिधानं उत्तरीयं वा कर्षन्तोऽनुक्षणं आहारार्थं अन्नाथन्ते। भार्या च अनपत्रपा सती "यथाजातो ह्यसि त्व" मिति तेन कलहायते। अथास्य गृहसौभाग्यं,- लूतास्यूतानां ऊर्णनाभिनिष्पादितानां प्रगुणानां-

अभितः प्रसृततन्तूनां पटलैः निकुरुम्बैः उल्लोचजालवदिव वितानास्तीर्ण-मिव भवतीति असंस्कारं गृहदृश्यम्। एवमियं दुर्दशानां त्रयी दशान्तराणा-मुपलक्षणमिति भाव्यम्। तत्र तत्र वर्णानुप्रासः ॥

श्लो- निजाक्षिगतमंजसा जगति हन्ति जन्मीति या
प्रथा स्फुटमदर्शि सा कमलपीठकीटेष्वपि ।
तवाक्षिगतमेव वा सपदि सम्पदि प्राणिनं
निमज्जयसि सिन्धुजे ! निरवधिर्विचित्रा कृपा ॥ (6)

निजाक्षीति = "द्वेष्ये त्वक्षिगतः" इत्यमरः। यो द्वेष्यः, तं मारयत्येव नोपेक्षते सर्वोऽपि जन्मी-प्राणो जन्तुरिति लोके प्रसिद्धम्। न केवलं प्रथामात्रम्। आ कमलासनं आ च कीट इदं दृष्टमपि। एवं यः स्वस्य अक्षिगतः, स वध्य एव भवतीति लोकप्रसिद्धौ सत्यां, अम्ब ! क्षीरसागर-सुते ! तवाक्षिगतः त्वद्दृष्टिपातपात्रभूतः (शत्रुरिति च गम्यते) प्राणी तु त्वया तत्क्षणादेव विविधसम्पत्समृद्धो निमज्जितो भवति। एवं द्वेष्योऽपि जन्तुः तत्र सकरुणं अनुग्राह्यो भवतीति त्वत्कृपायाः प्रभावो विचि-त्रोऽपरिच्छेद्यश्च। दृष्टश्चायं आद्रीपराधानामपि त्वया पवनात्मजाद्रक्षितानां राक्षसीनां विषये। अक्षिगतशब्दस्य रूढियोगाभ्यां प्राप्तमर्थद्वयं अवलम्ब्य श्लेषोत्तम्भिता इयं कवेः उक्तिवैचित्री ॥

श्लो- दर्शं दर्शं दुरितमर्मितं चेतनानां नितान्तं
किं वा कुर्यात् क्षुभितहृदयो वल्लभस्तान् स्वतन्त्रः ।
इत्यम्ब ! त्वं चकितचकिता मन्दहासोज्ज्वलास्या
भर्तुर्वक्षः त्यजसि न कदाप्यद्भुता तेऽनुकम्पा ॥ (7)

मन्त्ररत्ने पूर्वखंडे स्थितः श्रीमच्छब्दः भगवता सह देव्याः नित्ययोगं वदतीति सम्प्रदायः। तथा नित्ययोगस्य प्रयोजनं च, सापराधानां आश्रित-चेतनानां विषये विमुखं स्वतन्त्रमीश्वरं प्रति अतिवत्सलाया देव्याः पुरुषकार एवेति, श्रीशब्दव्युत्पत्तिलभ्योऽयमर्थ इति च, विशदयन्ति पूर्वाचार्याः। तमेनमर्थं अनुसन्धत्ते "दर्शं दर्शं" मिति श्लोकेन। चेतनानां दुरितान्य-

नन्तानि । तानि चोच्चावचानि सामान्यविशेषरूपेण । तत्र अकृत्यकरण-कृत्याकरणरूपं सामान्यं सह्यमपि कदाचित् स्यात् तितिक्षोः भगवतः । भगवद्भागवतापचारादिरूपं तु विशिष्टं असह्यं च तस्यापि । एवमनादेः कालात् दुरितसन्ततिं तन्वानोऽपि कश्चित्कदाचित् जाताभिमुख्यः भगवन्त-माश्रयते । स्वतन्त्रो भगवान् पूर्वापराधजातमस्य स्मरन् क्षुभितहृदयः "क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु" इति गर्जन् एनं शिक्षितुमेव प्रयतेत । अम्ब वत्सलतरा त्वं ईदृशमनर्थं चेतनस्य सम्भविष्णुमुत्प्रेक्ष्यैव नित्यमस्य भगवतो वक्षःस्थलं अजहती अध्यास्से । क्रोधोल्बणेन भगवतो व्यवसायेन भीतभीतापि मन्दस्मितमधुरमुखी "न कश्चिन्नापराध्यती"ति भर्तारमुपदिशन्ती तेन आश्रितानखिलानपि चेतनान् अनुग्राहयसि । अद्भुत-मिद कारुण्यं भवदेकनिष्ठं ध्रुवम् । इत्थमिह साम्प्रदायिकं श्रीमच्छब्दार्थ तत्त्वमावेदितं भवति ॥

श्लो- इदं तु महदद्भुतं गरुडकेतनस्य प्रिये !
तवाक्षियुगलं पतत्युपरि यस्य यस्याब्धिजे !
कदम्बमुकुला इव प्रविलसन्ति तस्मिन् जने
सहस्रमचिराद्दृशः किमिदमिन्द्रजालं रमे !! (8)

त्रैलोक्याधिपत्यवती इन्द्रपदवी च त्वत्कटाक्षैकफलमित्याह "इदन्तु" इति । गरुडकेतनः विष्णुः । तस्य प्रिये क्षीरवाराशितनये ! रमे ! इन्द्रजालवत् आश्चर्यावहः तव कटाक्षाणां प्रभावः । तथा हि, त्वन्नेत्रयुगलान्निस्सरन्ती कृपापूर्णा कटाक्षधारा यस्मिन् जने निपतति, सपदि तस्य देहो दीव्यति सहस्रेणाक्षिभिः, परितः स्फुरद्भिः मुकुलैः कदम्बः नीप इव । क्षणमात्रादयं विपरिणामो ह्यशक्यसम्भावनः । त्वत्प्रभावानभिज्ञानां 'इन्द्रजालमेत' त्किमिति भायात् । य स्तव पूर्णानुग्रहस्य पात्रं, स सद्य इन्द्रो भवतीति वक्तव्यं, तस्य देहः सहस्रेणाक्षिभिः स्फुरतीति भङ्ग्यन्तरेण कथनं पर्यायोक्तिः । कदम्बमुकुला इवेति उपमा च तदङ्गम् ॥

श्लो- मातः पद्मे ! हुतवहनिभे कौस्तुभे भासुराभे
स्वर्णाभां त्वत्प्रतिकृतिमहो ! वीक्ष्य, वह्निप्रविष्टाम् ।

स्मृत्वा सीतां, स्पृशत उरसि त्वां स्थितां चक्रपाणेः
शश्वद्भीतिं हरति तव यो मन्दहासः, स जीयात् ॥ (९)

देव्याः मन्दहासं हेतुविशेषमुत्प्रेक्षमाणः स्तौति "मातः पद्म" इति ॥ हे जननि ! लक्ष्मि ! विष्णोर्वक्षसि विभासमानः कौस्तुभमणिः, हुतवहेन सदृशः हुतवहनिभः अग्निवदरुणप्रकाशः अरुणदर्पणवत् निर्मले तस्मिन् हृदयनिषण्णायास्ते सुवर्णसमवर्णा मूर्तिः प्रतिबिम्बिता भवति । कौस्तुभे तां ते प्रतिकृतिं प्रेक्षमाणः पतिः सौसादृश्यमहिम्ना पुरा वह्निप्रविष्टां त्वां सीतामनुस्मरति । न स्मरणमात्रमिदम् । किन्तर्हि ? स्मरणसंवलितेन प्रत्यभिज्ञाप्रत्यक्षेण भ्रमरूपेण सैवेयं सीता पुनरग्निं प्रविष्टेति सः उद्विजते । तथा उद्विग्नस्स चक्रपाणिः "किं मे हृदि लक्ष्मीरस्ति, उत हृदयादपेतेति भीतभीतो वक्षः परामृशति । तथा तस्य करस्पर्शेन पुनः प्रत्ययं ददती भ्रमकृतां भीतिमपहरन्ती भवती मन्दमिव स्मयते । सर्वज्ञस्यापि एवं भ्रमसाम्राज्यकृतमुद्वेगं वीक्षमाणायास्ते परिहासः विजयताम् । अत्र भ्रान्तिमदलंकारः ॥—एवमेव भ्रान्तिविशेषान्मुग्धं प्रियया राधया परि-हसितं हरिं वर्णयतः कवेः कस्यचित् मधुरः श्लोकोऽयमिह स्मरणार्हः; यथा="कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् । असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन् जयति जनित-व्रीडाहासः प्रियाहसितो हरिः ॥" इति ॥—

श्लो— अहं तव सुतश्चिरात् क्षुदभिभूतभुग्नोदरो
विरोदिमि निराश्रयः किमिदमम्ब ! मां नेक्षसे ?
त्यजेद्यदि जनन्यहो ! जगति जातमात्मार्भकं
तदा तदवनं कथं कथय कामितार्थप्रदे !! (10)

स्वदुर्दशां देव्यै निवेद्य तदनुग्रहं प्रार्थयते "अहं तव सुत" इति । हे लोक-मातः ! तव खल्वहं सुतः बहोः कालादपि बुभुक्षापीडितकुक्षिः गत्यन्तर-हीनश्च शोचामि । तथापि कुतो मां नावलोकसे ? लोके मातैव चेदात्म-नस्सुतं त्यजति, तदा तं रक्षितुं न हि कश्चिदन्य उपायो दृश्यते । ब्रूहि किमिदमौदासीन्यमुचितं ते ? "कामितार्थप्रदे !" इति साभिप्रायं

विशेषणम् । कामितान् अखिलार्थान् प्रददत्यास्ते मदेकवर्जं किमिदं व्रतमिति स्तोभवचने तात्पर्यम् ॥

श्लो– भिक्षां दीनः प्रतिगृहमटन् अम्ब ! पृष्टो जनैस्त्वां
"पश्यत्यम्बा न तव कि"मिति, ब्रूहि किं वा ब्रवीमि ।
जिव्हा जिह्रेत्यपि ! निगदितुं लोकमात स्त्वयाहं
त्यक्तोऽस्मीति प्रकटय दयां ते तदस्मिन्नुदाराम् ॥ (11)

भिक्षामिति ॥ "अयि अम्ब ! लोकमातः ।" इति सम्बोधनद्वयं अनर्थान्तरमिव । तथापि, "अखिलजगन्मातरं अस्मन्मातरं" इतिवत् सामान्य-विशेषपरतया सार्थक्यम् । यद्वा, "इन्दिरा लोकमाता मा" इति कोशानु-सारेण योगरूढ्या लक्ष्मीपरं लोकमातृपदं, इति विशेष्यवाचितया समाधे-यम् ॥ किम्पचानोहं भिक्षामार्जितुं प्रतिगृहं पर्यटामि तदा लोको मां पृच्छति "किं ते माता त्वां न पश्यति ? इति । एवं सति किं मया प्रति-वाच्यं इति त्वमेव मे कथय । "लोकमात्रा त्वया विसृष्टोऽहमस्मी"ति वक्तुं जिह्वा मे ह्रिया संकुचति । तत्रापि प्रतिष्ठाभंगकरीं ईदृशीं दुस्स्थितिं निरसितुं एक एवोपायः । कृपाशिशिरया दृशा मामीक्षस्व यथा पुना रिक्तो न भवेयम् । न वा कंचित् श्रयेयम् ॥

श्लो– सदा मम निसर्गजं दुरितजातसम्पादनं
क्षमैव कमलालये ! तव सदापि नैसर्गिकी ।
स्वभावविरतिर्भवेत्किमु कदापि वस्तुस्थितेः
निपातय तदद्य ते करुणया कटाक्षं मयि ॥ (12)

स्वस्य दोषित्वे, देव्याश्च क्षमाशालित्वे हेतुमाह "सदा मम" इति । नैसर्गिकमिदं मे कृत्यम्, यत् नियमेन पापाचरणमिति । निसर्गः स्वभावः । हे पद्मवासिनि ! सन्ततं च तव क्षमैव सहनशीलतैव नैसर्गिकी स्वाभा-विकी । धर्मिसमसत्ताकत्वमेव धर्मस्य स्वाभाविकत्वम् । स्थिते वस्तुनि तादृशस्वभावस्य विरतिः विनाशः कदापि न हि सम्भविष्णुः । तथा च अनादेः कालात् सहजस्य मत्पापाचरणस्य विरतिं अप्रतीक्ष्य, तव

नैसर्गिकक्षमागुणस्य वैभवं चावेक्ष्य, मयि सकरुणान् कटाक्षान् क्षिप । येन त्वत्सुतोऽहं सुखी स्याम् । पुनः पापोन्मुखश्च नैव स्याम् ॥

श्लो– वात्सल्याख्यं गुणमविरतं ते तु संचिन्त्य धैर्यात्
पापात्मापि प्रथितविभवं पादपद्मं प्रपन्नः ।
तस्माल्लक्ष्मि ! प्रहिणु मयि ते स्फीतदोषे दयार्द्रां
दृष्टिं किंचित् सफलय गुणं दोषभोग्यत्वरूपम् ॥ (13)

पूर्वश्लोके देव्याः क्षमागुणं प्रति प्रास्तावि । इह तत्काष्ठाभूतं वात्सल्यगुणं प्रस्तौति "वात्सल्याख्य" मिति । अस्य गुणस्य लक्षणनिर्वचने श्रीवैष्णवेषु द्वयी गतिः । दोषाणामपि गुणवत् भोग्यतया स्वीकरणं वात्सल्यमिति वृद्धाः । सोऽयमतिवाद इति कृत्वा, दोषादर्शित्वमेव तदिति नव्याः । तत्राद्यः पक्ष एव साधीयानिति, स्वाभिमत इति च, चतुर्थपादेन कविः स्पष्टयति । श्रीभाष्यकाराश्च शरणागतिगद्ये "...सौशील्य-वात्सल्य...गुणगणौघ-महार्णव !" इति प्रथमं सम्बोध्य, पुनः "आश्रितवात्सल्यैकजलधे !" इति प्रातिस्विकरूपेण सम्बोधयन्तः अस्य गुणस्य प्राधान्यमभिप्रयन्ति । तत्रैवं श्रीसुदर्शनसूरीणां विवरणं यथा–"वात्सल्यं-दोषेऽपि गुणत्वबुद्धिः; यथा सद्यः प्रसूताया धेनोः वत्से । इदं च क्षमाकाष्ठारूपम् । अत एव हि पृथगनुक्तिः क्षमायाः" इति । अत्र च धेनुं निदर्शनीकृत्य व्युत्पत्त्यर्थप्रदर्शनात् तद्वत् प्रेमान्ध्येन आश्रितदोषाणामपि गुणवत् भोग्यतया ग्रहणं फलितम् । "दोषो यद्यपि तस्य स्यात्" इति, "न त्यजेयं कथंचन" इति, "अपि चेत् सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः..." इति च ब्रुवतो भगवतो हृदयानुसारी अयमेव पक्षः समंजस इति बोध्यम् । एवं 'एन्नडियार् अदु शैयार्...शैतारेल् नन्रू शैतार्" (मद्भक्ता न दोषान् कुर्वन्ति । अथ कुर्वन्ति, तदपि साध्वेव कुर्वन्तीति मन्ये) इति स्वद्रविडगाथायां शरण्यहृदयमुपबृंहयन्तः श्रीविष्णुचित्तमुनीन्द्राः, "कुन्रनैय कुट्रं शेयिनुं कुणं कोळ्ळुं" (गिरिसदृशमहादोषकरणेऽपि, तमपि गुणत्वेन गृह्णन् भगवान्) इति ब्रुवाणा महदायह्वदिव्यसूरयः. अन्ये च पूर्वाचार्या अत्र प्रमाणम् । एतेन "अतिवादोऽय" मित्याक्षेपः शरण्यहृदया-नवबोधनिबन्धन इति सिद्धम् ॥

अथ श्लोकार्थं परिमृशामः। मातर्लक्ष्मि ! तावकं वात्सल्यगुणं सन्ततमहं भावये मनसि। तेन च सम्पन्नधैर्यः पापाचरणप्रवीणोपि न बिभेमि अतः शरणं प्रपद्ये त्वत्पादपद्मं, मां दुष्टमपि प्रेम्णा रक्षिष्यसीति विश्वस्य। एवं निहीनाचारेऽपि प्रपन्ने मयि दयार्द्रां दृष्टिं प्रहिणु। मादृशानामस्वीकरणे तव वात्सल्यगुणो हि अप्रकाशः स्यात्। अतश्च प्रेम्णा मामपि अनुगृह्य दोषभोग्यत्वमेव वात्सल्यलक्षणमिति प्रकटय। श्लोके "प्रथितविभव" मिति विशेषणं पादपद्मेऽन्वेति। रुचिविशेषेण भक्तभोग्यत्वात् उत्तारकत्वाच्च। यद्वा वात्सल्यगुणस्य विशेषणमिति वेद्यम्॥

श्लो— पुरार्थिजनसात्कृतं न किमपि त्वया सादरं
तदद्य कथमिभ्यतामभिलषस्यहो ! निस्त्रपः।
इतीममनवेक्ष्य मां त्यजसि चेन्मुकुन्दप्रिये !
कटाक्षमहिमा भवेत् बत तदैव ते कुंठितः॥ (14)

अस्ति हि श्लोकशकलं किमपि धनिकं प्रति याचकस्योपदेशरूपम्—"अदत्वा मादृशो मा भूः दत्वा त्वं त्वादृशो भव" इति। यः पुनः पुरा यत्किञ्चिद्दानैः अर्थिजनमनोरथं पूरयति, तस्य क्रमेण सम्पदविरतं वर्द्धतेति नीतेस्सारमिदम्। एनां नीतिमवलम्ब्य सम्भावितां देव्याश्शंकां समाधत्ते—"पुरार्थिजने"ति। न खलु पूर्वं त्वया दीनानां कृते प्रेम्णा किंचिदपि धनमर्पितम्। एवं ईषदपि दानरूपं सुकृतं अकुर्वाणस्त्वं निर्लज्जः कथं मां याचसे—'देवि ! मां इभ्यं-धनाढ्यं विधेही'ति। अतस्त्वं मया न कटाक्षणीयोऽसि"। इति देवी समाक्षिपन्ती मां त्यजेदित्ति कवेस्सम्भावना। अत्रैवं कविस्समधत्ते—'हे मुकुन्दप्रिये !" इति। मोक्षप्रदातुः दिव्यमहिषि—इति साभिप्रायं सम्बोधनम्। स खलु ते पतिः भगवान्...."प्रेंक्षे कंचित कदाचन" इति ब्रुवाणः स्वकृपायाः निरपेक्षरक्षकतां प्रकटयति। "नायमात्मा प्रवचनेन लभ्यः...यमेवैष वृणुते तेन लभ्यः" इति श्रुतिरपि तादृशमेव भगवतः स्वभावं अभिव्यनक्ति। एवमादिप्रमाणैः श्रीवचनभूषणादिप्रबन्धेषु भगवत्कृपाया अहेतुकतां समर्थयन्ते च सम्प्रदायवृद्धाः। मोक्षप्रदत्वमेव मुकुन्दशब्दार्थं इति "...स्वयं मुक्तिं ददातीति मुकुन्दः। पृषोदरादित्वात् साधुः" इति भट्टपादानां सहस्रनामभाष्ये। एवं आश्रितगतं

सुकृताधिकारलेशमपि अनवेक्ष्यैव मोक्षमपि प्रददानस्य भगवतो दिव्यमहिषी त्वमपि तत्तुल्यशीलवयोवृत्तेति हि जोघुष्यते। अतः त्वयाऽहं दानादिकं सुकृतलेशमकुर्वाणोऽपि न परिहरणीयः। प्रत्युत निश्शंकं निर्हेतुककृपापाङ्गैः अवश्यमनुग्राह्यः। अन्यथा हि पूर्वोक्तप्रसिद्धविभवस्ते कटाक्षमहिमा कुण्ठितो भवति। दुरपवादात् मोघप्रसारो भवति। बत! हंहो! इदमसह्यं नः।—

श्लो– मातर्लक्ष्मि! त्वदतिमधुरस्निग्धनेत्रैकदासो
दैत्याराति: सृजति निखिलं त्वन्मुदे लोकमेवम्।
तस्मात्सत्यं त्वयि निपतति द्वन्द्वसर्गैकहेतुः
लक्ष्मीरेवेत्यतिकटु वचः, पाहि सर्वं समं तत्॥ (15)

मातरिति॥ हे जननि! श्रीदेवि! दैत्यारिः विष्णुः अखिलमिमं चिदचिदात्मकं लोकं सृजति स्म 'एवं–सुरनरतिर्यगादितारतम्यविशिष्टतया सुखदुःखादिवैषम्यविशिष्टतया च। वस्तुतः जीवात्मनां सर्वेषामपि ज्ञानैकाकारतया समत्वेऽपि, किमिति भगवता पक्षपातिनेव कस्यचित् सुरनायकत्वेन कस्यचित् दरिद्रत्वेन, कस्यचित् सुखित्वेन कस्यचित् दुःखित्वेन इत्येवं विषमसृष्टिः क्रियते? इत्याशंकां परिहर्तुं शास्त्रकृतो व्यासादयः "वैषम्यनैर्घृण्ये न सापेक्षत्वा" दित्यादिसूत्रैः तत्तज्जीवगतपुराकृतपुण्यपापादिकमेव तथा तथा सृष्टौ हेतुरिति, न तु भगवति पक्षपातादिशंकेति च, संगिरन्ते किमपि। तदास्ताम्। अपरे तु भट्टपादादयः सहृदयाः त्वन्मुदे त्वत्सन्तोषजननाय एवं किल सृजतीति सम्भावयन्ति। सर्वस्य च सदा एकरूपत्वे, (केवलसुखरूपत्वे केवलदुःखरूपत्वे वा) न हि तद्दर्शनाच्चमत्कृतिः। किन्तु सत्येव वैचित्र्ये, तदवलोकनेन चमत्कृतिः। अतः त्वन्मनोविनोदाय एवं विचित्रं जगत् सृष्टवा तव प्रियो भगवान् भवत्यै दर्शयतीति अमीषां मतम्। उक्तं च अमीभिरित्थमेव यथा—

"नमः श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः
ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत्॥" इति

....''सर्वं च कुर्वन् हरिः यस्या वीक्ष्य मुखं तदिंगितपराधीनो विधत्ते''
इति च ॥ स हि भगवान् तवातिमधुराणां–महानन्दहेतूनां स्निग्धानां-प्रेमरसवर्षिणां च, नेत्राणां–कटाक्षाणां, एकदासः-वशवर्तीति च, तथा सृष्टिकरणे हेतुं निगदन्ति । मातः ! यदीदमेव सत्यं तदा भगवत्कर्तृकसुख–दुःखात्मकद्वन्द्वसृष्टेः त्वमेव हेतुः भवसीति, जनः त्वय्येव अतिकटुतरं अपवादं प्रवर्तयेत् । इद हि महामहिमशालिन्याः तवैव, अस्माकमपि त्वन्महिमविदां असह्यं भवति । अतः सर्वचेतनेषु समानैव कृपामयीं दृष्टिं प्रहिणु । लोकास्समस्ताः सुखिनो भवन्तु । मा कश्चित् दुःखभाक् भवत् । त्वद्दृष्टया आनन्दमय्येव भगवत्सृष्टिरेधताम्–इत्यहं प्रार्थये ॥—

श्लो– प्रसिद्धकुलजोऽपि च प्रगुणसद्गुणोऽपीन्दिरे !
निकारनिलयः क्षितौ तव कटाक्षदूरीकृतः ।
निहीनकुलसम्भवोऽप्यमितदुर्गुणोऽप्याशु यः
त्वदक्षिविनिभालितः, सुकृतिभिस्स वै सेव्यते ॥ (16)

इह देवीकटाक्षाणां अन्वयव्यतिरेकाभ्यां लभ्यं फलमाह प्रसिद्धेति । सदा–चारशालितया वेदशास्त्रविज्ञानवत्तया शुचितया च विख्याते वंशे सम्भूतोऽपि अभिनन्दनीयगुणभूषितोऽपि यो नरः त्वत्कटाक्षाणां पात्रं नैव भवति, सः लोके निकारनिलयः-सर्वजनतिरस्कारास्पदं भवति । दरिद्रं मनुजं कुलीनं गुणवन्तमपि लोको न केवलं न सम्मन्येत, प्रत्युत तिरस्कुरुते च इति भावः । तथा क्षुद्रकुलसम्भूतोऽपि बहुलदोषोऽपि यो नरः त्वया कटाक्ष-पात्रतां नीतः, तं धनसम्पन्नं परितोऽनुसरन्तः सेवन्ते प्राज्ञा इति दृष्टम् । सर्वमिदं त्वत्कटाक्षाणामेव वैभवमिति भावः ॥ —

श्लो– पद्मावासे ! हृदयकमले मे त्वदंघ्रिं निधेही–
त्युच्चैर्वक्तुं हृदयमतुलं वेपते मामकीनम् ।
कामक्रोधाद्यमितरिपुषड्वर्गशल्योपगूढं
हृत्पद्मं यत्, तव तु मृदुलं पादपाथोरुहं यत् ॥ (17)

पद्मावासे इति । इदं साभिप्रायं प्रकृतोपयोगि सम्बोधनम् । पद्मालयायास्ते मदीयं हृदयमपि कमलमेवेति कृत्वा पादविन्यासस्योचितं स्थानमित्य–

चिन्त्यमिति भावः। एवं विशेष्यस्यैव साभिप्रायत्वात् परिकरांकुरालंकारः। "पद्मकोशप्रतीकाश हृदय"मिति श्रुतिः मनुष्यहृदयस्य पुंडरीकाकारता-माह। मातः लक्ष्मि! अत एव प्रमाणात् मदीये हृदयपुंडरीके त्व पदं निधेहीति प्रार्थयितुमैच्छम्। किन्तु पुनः विमृश्य तां प्रार्थनां कर्तुमपि भय-कम्पितो भवामि। अयोग्यं मे हृदयं त्वत्पादविन्यासस्येति हेतुद्वयन व्यमृशम्। तदेव हेतुद्वयं उत्तरार्धेन निरूप्यते वाक्यद्वयेन। कामक्रोधाद्याः षडपि दुर्गुणाः शल्यवत् मे हृदये निरूढा वर्तन्ते असह्याः, इत्येको हेतुः। त्वत्पादपद्मयोः क्लेशलेशाक्षमं च अतिमात्रं सौकुमार्यमिति अपरो हेतुः। अय भावः। यद्यपि भवती पुरा रामानुवर्तनोत्कण्ठया "अग्रतस्ते गमि-ष्यामि मृद्नन्ती कुशकंटकान्" इति यथा उक्तवती, तथा मय्यपि वात्सल्यात् शल्योपगूढेऽपि मे हृदि वने इव सहसा पदां निधातुं उद्युंजीत; तथापि क्रान्तदर्शी कविः कश्चित् त्वत्पादसौकुमार्यं सकरुणं एवमवर्ण-यत्–यथा—

"सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
गत्वा जवात् त्रिचतुराणि पदानि सीता।
गन्तव्यमस्ति कियादत्यसकृत् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्" ॥ इति ॥

एवं सौकुमार्यातिशयात् समतले एव त्रिचतुरपदविन्यासेऽपि क्लिश्यमाना भवती कथं मे शल्योपगूढे हृदि पदविन्याय सहिष्यते? किं च भट्टपादाः पद्मवासिन्यास्ते मसृणं पंकजरजोऽपि पादरुन्तुदं–इति श्रीगुणरत्नकोशे गृणन्ति। अतः उक्तहेतुद्वयात् प्रार्थयितुमपि बिभेति मच्चित्तमिति ॥—

श्लो– तथापि कमलालये! तव पदाब्जसंसर्गतो
मदीयहृदयं भवत्यमितमार्दवं सद्गुणैः।
मुकुन्दचरणांबुजं कटुतरां तु बृन्दावनीं
मनोज्ञमृदुशाद्वलामुपवनीं न चक्रे किमु?? (18)

एवं पूर्वोक्तविधया भीतस्सन्नपि, पुनरन्यथा मनस्समाधत्ते दृष्टान्तविशेष-मनुसन्दधानः "तथापि" इत्यादिना। हे पद्मालये! देवि! तथापि-

कामक्रोधादिशल्योपगूढमपि मदीयहृदयं परमपावनात् भवत्याः पादाब्ज-संसर्गात् सद्यस्सम्भूतैः विनयभक्त्यादिगुणैः जुष्टं अपेतकाठिन्यं अति-सुकुमारमेव सम्पत्स्यते, इति विश्वसिमि । तथाहि । पुरा अतिगहना कुशकंटकाकीर्णा च बृन्दाटवी श्रीकृष्णपादाब्जविन्यासधन्या सती सुन्दर-सुकुमारहरितशाद्वलाकीर्णा उद्यानभूमिरिव परिणता, इति हि पौराणिका स्समगिरन्ते-यथा-

"वृन्दावनं भगवता कृष्णेनाक्लिष्टकर्मणा ।
उत्पन्ननवशष्पाढ्यं गवां वृद्धिमभीप्सता ॥" इति ।

अतः भगवत्पादाब्जसंसर्गात् प्रभावशाली भवत्पादाब्जसन्निधिरपि सद्य एव मे हृदयं काठिन्यमपास्य सुभगसुकुमारं विधास्यतीति भावः । अत्र प्रस्तुतसमर्थनाय अप्रस्तुतवृन्दाटवीविषयविन्यासात् अर्थान्तरन्यासा-लंकारः ॥—

श्लो- यद्यम्बास्मिन् कलयसि दयां तावकीं नैव दीने,
त्वत्पुत्रोऽयं चिरविरचितक्रूरकर्मानुरूपे ।
घोरे दुःखव्यतिकररटच्चेतनौघार्तनादे
कुम्भीपाके पतति, तदमुं पाहि दोर्भ्यामुदस्य ॥ (19)

स्वस्य घोरनिरयपातयातनां भाविनीमनुसन्धाय, तन्निवृत्तिं प्रार्थयते "यदी"ति । दीनेऽस्मिन्-मयीत्यर्थः । अत्र दैन्यं स्वरक्षणे स्वस्य अशक्ततानु-सन्धानात् । तावकी दया एकैव मद्रक्षणे पर्याप्त उपायः । तां चेत् मयि न प्रसारयसि, तदा त्वत्सुतस्य मम घोरे कुम्भीपाकाभिधे नरके निपातो ध्रुवम् । स एव हि मया चिराद्विरचितानां पापकर्मणां अनुरूपः उदर्को-ऽनर्थः । तत्र च यातनादुःखातिरेकात् आक्रोशतां चेतनानां आर्तनादः परितो विसृमरः । तादृशे स्मृतिमात्रादपि भयंकरे नरके पतयालुं मां त्रायस्व भुजाभ्यां उत्क्षिप्य । लोके जननी का नाम कूपे पतयालुं सुतं वीक्षमाणापि उदासीना इति भावः ॥—

श्लो– दयाप्रकटनस्य ते सुसमयोऽयमेवाब्धिजे !
नितान्तदुरिताकरे प्रकटयात्र दीने दयाम् ।
सुदुर्लभ इहेदृशो यदतिपातकौघार्जने
रतस्तव, तदद्य मां सुलभमम्ब ! मैव त्यज ॥ (20)

सद्य एव स्वस्य दयनीयतां सहेतुकं समर्थयते "दयाप्रकटनस्ये"ति । क्षीराब्धितनये ! अम्ब ! दया हि तस्मिन् प्रकटनीया भवति यो दीनः । दीनश्च स एव योऽतिमात्रं नानाविधं दुरितमेवारचयन् एकान्ततः तदनुरूपं उच्चावचं दुःखमनुबोभवीति । लोके तु विचार्यमाणे, दुष्कृतमिव सुकृतमपि किंचित् विरचय्य, तदनुसारतः दुःखसम्भिन्नं सुखमप्यनुभवन् जनः प्रायो दृश्यते । उक्तं हि कालिदासेन–"कस्यैकान्त सुखमुपनतं दुःखमेकान्ततो वा" इति । न तु दुष्कृतमेव कुर्वाणः तत्फलतया दुःखमेव च एकान्ततोऽनुभवन् कश्चित् लभ्येत । वस्तुतो यस्तादृशः, तस्मिन्नेव प्रकटिता ते दया महतीं प्रथामापादयेत् । तादृशश्च निरन्तरं घोरपापाचरणशीलोऽहमेकः । दुर्लभश्चात्र विषये मत्सदृशोऽन्यः । अतः अलभ्यलाभरूपे मयि दीने शरणागते दयां ते सपदि प्रकटीकुरु । मा पुनः लब्धमवकाशं परित्यज । अन्यथा दया ते निर्विषयैव स्यादिति भावः । "मृषा न ब्रुवे, परमार्थमेव ब्रुवे" इत्युपक्रम्य, "यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ ! दुर्लभः" इति कथिता श्रीयामुनमुनेस्सूक्तिरिह अर्थतोऽनुसृता ॥ —

श्लो– मातर्लक्ष्मि ! प्रणतजनतातापहन्त्रि ! प्रसीद
त्वत्कारुण्यप्रणयिनममुं मामपांगेन सिंच ।
ईदृक् प्रायो दुरितनिलयो दुर्लभस्त्वद्दयायाः
तस्मात् पात्रं स्वयमुपनतं मा जहीहीति याचे ॥ (21)

उक्तस्यैवार्थस्य दृढीकरणाय पुनरपि तमेवार्थं शब्दान्तरेणाह "मातर्लक्ष्मी"ति । यथा नैषधे प्रथमसर्गे प्रथमश्लोकोक्तार्थ एव द्वितीयश्लोकेऽपि अनूदितः, यथा च तत्रैव "स्वकेलिलेशस्मित"–इत्यादि (23) त्रयोविंशश्लोकेन निरूपित एवार्थः पुनः तदनन्तरश्लोके "सरोरुहं तस्य दृशैव" इत्यादिके भङ्ग्यन्तरेण प्रतिपादितः, यथा च शिशुपालवधे तृतीयसर्गे

माघेन "प्रसाधितस्थास्य..." (13) इत्यादिश्लोकोक्त एवार्थः तदनन्तर-श्लोके "कवाटविस्तीर्ण..." (14) इत्यस्मिन् पुनः प्रतिपादितो भंग्यन्तरेण। अत्रैव मल्लिनाथोक्तिरपीयं व्याख्यायां अवधेया—यथा—"प्रायेण एकार्थ-मप्यनेकं श्लोक उक्तिविशेषलोभात् लिखन्ति कवयः।"...इति ॥—एवं प्रकृतश्लोकद्वयेऽपि भंग्यन्तरेण एकार्थस्यैवोक्तिः प्रौढिरिति भाव्यम् ॥—

हे! जननि श्रीदेवि! प्रसन्ना मयि भूयाः। मादृशानां प्रणतानां सर्वमपि तापं निहन्तुं त्वं समर्थासीति त्वां इदं याचे। तावकीनां दयामहं लिप्से। तत्प्रणालीरूपैः कटाक्षै रभिषिच। किमर्थं दयनीयमिति मा स्म संदिग्धाः। इतः परं मादृशः पापैकप्रवणो न क्वापि सुलभस्तव दयायाः पात्रीभवितुम्। अयत्नलब्धं चेत् त्यजसि, तदा तवैव प्रथाहानिः ॥ —

श्लो- त्वदीक्षणकृतक्षणप्रचलनप्रसर्पत्प्रभा-
प्रभाकरसुताधुनीस्नपनधूतपंकस्तु यः।
रमेत स रमे! सदा धनददर्पसम्मर्दनो
धनैर्धरणिमण्डले विधुमुखीविलासाञ्चितः ॥ (22)

देव्या स्वकटाक्षपात्रीकृतस्य कुबेराधिकमैश्वर्यं तदनुगुणभोगश्च संपत्स्यत इत्याह "त्वदीक्षणे"ति। हे रमे! त्वदीक्षणकृतं त्वन्नेत्रजनितं यत् क्षण-प्रचलनं-क्षणमात्रकालिकः परिस्पंदः, तेन प्रसर्पति तव नेत्रगता सहजा नीलप्रभा। "नीलं श्रीनेत्रकान्त्या" इति श्रीसुदर्शनशतकोक्तरीत्या देवी-नेत्रप्रभायाः नैल्यं स्वाभाविकमिति अनुसन्धेयम्। सा नेत्रकान्तिरेव प्रभा-करसुताधुनी-यमुनानदी इति रूपणम्। ननु "प्रभाकरसुताधुनी" इत्यत्र समासे प्रभाकरसुताशब्दस्य पुंवद्भावः कुतो न? नैवम्। "कालिंदी सूर्यतनया यमुना शमनस्वसा" इति कोशरीत्या प्रभाकरसुताशब्दस्य अभाषितपुंस्कतया यमुनायाः संज्ञावाचकत्वेन विवक्षणमिति अदोषः। तस्यां नेत्रकान्तिरूपयमुनायां स्नपनेन शोधनेन धूतपंकः क्षालितपापकर्दमः यः पुमान्, त्वदपांगपातेन यः पवित्रितो जन इति भावः। सः अपरिमे-यैर्धनैः आढ्यस्सन् चन्द्रमुखीभिः वनिताभिः विलासकेलीश्च अनुभवन् ऐश्वर्येण कुबेरमपि अधरीकुर्वन् भूमण्डले चिरं विराजेत। सर्वाधिकसम्प-त्प्रदायिनी भवतीति भावः ॥—

श्लो–        नैतच्चित्रं यदिह सुकृती स्वीयकर्मानुरूपान्
भुंक्ते भोगानिति, जलाधिजे ! का कथा त्वत्कृपायाः !
पापीयांसं तव तु करुणा मादृश हेतुशून्या
कुर्याद्दीनं यदि भुवि तथा. स्यात्तदा तद्विचित्रम् ।। (23)

"कृष्टी फली'' इति लाकोक्तिः । कृष्यादिना परिश्रमेण लोके धनधान्यादिसमृद्धिमनुभवन्नाक्ष्यते । स्वर्गादिपारलौकिकफलेप्सुरपि यज्ञादिकं वैदिक कर्म सुकृत विधिवदनुतिष्ठन् तत्तद्भाग दिव्यमनुभवतीति शृणुमो वेदप्रमाणतः । किं बहुना ! शतमश्वमेधानाहृत्य इन्द्रो भवतीति च तत एव विद्म. । न चैतदाश्चर्यम् । तत्तद्भोगानां स्वकृतकृषियज्ञादिलौकिककर्महेतुकत्वात् । तव कृपा तु निर्हेतुकमेव तत्फलं सर्वं प्रसूत इति, इदमेव महद्विचित्रमित्याह–"नैतच्चित्र" मित्यादिना ।। यद्वा—मीमांसकाः देवानां विग्रहवत्तामनिच्छन्तः कर्मण एव सुकृतस्य फलप्रदत्वमिच्छन्ति । अस्मत्सिद्धान्ते तु देवतैव तत्तत्कर्मनिराराधिता फलप्रदा भवतीति, अचेतनस्य कर्मणः तथात्वं न सम्भाव्यमिति च. श्रीभाष्ये भगवद्रामानुजार्यैः प्रत्यपादि । तथा च यज्ञादिना सुकृतेन भवतीमाराध्य इन्द्रादिः भवत्या प्रत्त ऐश्वर्यफलमनुभवतीति नैतद्विस्मयाय । अकिंचित् कुर्वाणं मामपि यदि तत् फलं लम्भयसि, तदा हि विस्मितैर्भाव्यमित्याह–"नैतच्चित्र" मित्यादिना ।

हे क्षीरवाराशिकन्ये ! सुकृती-पुण्यकृत् । सः स्वकृतकर्मविशेषानुसारेण त्वयि फलप्रदायां सत्यां यदि भोगान् विविधाननुभवति, तदा न किंचित् चित्रमिदम् । का कथा त्वत्कृपायाः ? भोगस्य सुकृतहेतुकत्वात् "अहमेव दयावती फलं ददे" इति वीरवादस्ते नोचित इति भावः । किन्तु अतिपापिनं दीनं मादृशं हेतुभूतसुकृतगन्धविरहेऽपि तथा-सुकृतफलभागिनं यदि तव कृपा कुर्यात्, तदेव तदा महदाश्चर्यं भुवि प्रथेतेति वाक्यार्थः । इयं व्याजोक्तिः ।।

श्लो–        पतिस्तव "सकृन्नरो वदति चेत् तव स्मीति तं
भयाद्विरहितं तनोम्यहमिदं व्रतं मे ध्रुवम् ।"

इति स्वयमभाषत. प्रकटयन् रमे ! त्वत्कृपा-
कटाक्षवशवर्तितां सकलदोषसाक्ष्यप्यहो ॥ (24)

"सकृदेव प्रपन्नाय"...इत्यादिश्रीरामचरमश्लोकमनुसन्धाय, भगवतः सा अभयप्रदानशक्तिरपि त्वदेकनिघ्नेत्याह-"पतिस्तवे"ति देवीं पुरस्कृत्यैव भगवान् प्रपत्तव्य इति. तदैव सा प्रपत्तिरपि फलेन व्याप्ता भवतीति च, अन्वयव्यतिरेकाभ्यां सत्सम्प्रदाये निर्णीतोऽयमर्थः। श्रीरामायणे विभीषण-शरणागतिघट्टे, वानरवीरेषु "शत्रुपक्षीयोऽयमिति, न स्वीकार्य इति, हन्तव्य" इति च ब्रुवाणेषु, भगवतः श्रीरामचन्द्रस्य साभिनिवेशोक्ति-रियम्-यथा-

"सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥" इति।

अत्र श्लोके "सर्वभूतेभ्य" इति चतुर्थी पंचमी वेति उभयथापि योजना। चतुर्थीपक्षे मित्रा ऽुदासीनविवक्षाविरहेण सर्वस्मै शरणागताय अभयं ददा-मीति सूचितम्। उक्तं च "यदि वा रावणः स्वयम्"...इति। यथा स्वस्य कदापि सत्यादप्रच्युतिज्ञापनाय "रामो द्विर्नाभिभाषते" इत्युक्तम्, तथा शरणागतेनापि न बहुवारं, किन्तु अलं एकवारमेव "शरणं मे भवे"ति प्रार्थनं, इति "सकृदि" त्यनेन व्यंजितम्। इदं आभिमुख्यसूचनरूपं प्रार्थनं तु कार्यमिति, स्वकृतबन्ध-मोक्षव्यवस्थाभंगवैरह्याय (सर्वमुक्तिप्रसंग वारणाय) भगवानपेक्षते, इति

"सर्वज्ञोऽपि हि विश्वेशःसदा कारूणिकोऽपि सन्।
संसारतन्त्रवाहित्वात् रक्ष्यापेक्षां प्रतीक्षते" ॥ इत्यादिशास्त्रै

रुद्घोष्यते। देवी तु तदपि प्रार्थनावचनं नापेक्षते इति तस्याः कृपावैभव-मुद्वेलमित्यन्यदेतत्। व्रतफलं यथा यजमानस्यैव, तथा प्रपन्नस्य स्वीकरणे परित्यागे वा लाभहानी ममैवेति "एद्व्रतं ममे" त्यनेन ध्वनितम् ॥
लोके अनपराधिनं अभयप्रदानेन रक्षन्तीति पश्यामः। अपराधिनं न

कश्चित् त्रायेत। तत्रापि साक्षात् तत्कृतमपराधं पश्यन् कस्त्रायेत ? असौ भगवान् रामचन्द्रः सकलान्तर्यामितया साक्षी सन् तत्तदपराधान् वीक्ष्यापि तेषामाभिमुख्यमात्रेण कृपालुः परित्रायते, इति साश्चर्यं भगवतो वैभवं विशिनष्टि कविः "सकलदोषसाक्ष्यप्यहो" इति। दृष्टं हीदं काकस्य परित्राणे। हे रमे! त्वदभिमानपात्रभूतानेव त्वया प्रेरितो भगवान् रक्षतीति अन्वयव्यतिरेकाभ्यां निर्धारणात्, सः त्वत्कटाक्षवशवर्तितामात्मनः ख्यापयति स्फुटम्॥

श्लो— सर्वाधीशोऽप्यखिलजगतां सृष्टिरक्षालयानां
कर्तापीन्द्राद्यखिलविबुधैस्सेव्यमानोऽपि नित्यम्।
नोचेन्मातः! तदुरसि भवत्पादलाक्षार्द्रचिह्नम्
दैत्यारातिः कथमिव भजेत् देवि! पारम्यमेवम्॥ (25)

हरेः सर्वदेवापेक्षया परमत्वं त्वत्सम्बन्धादेवेति स्तौति "सर्वाधीश" इति। "पतिं विश्वस्य" "क्षरात्मानावीशते देव एकः" इत्यादिश्रुतिभिः आम्नातो हि भगवान् सर्वात्मनामधीशत्वेन। तथा "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति" इति, "तज्जलानिति शान्त उपासीत" इति च सर्वसृष्टिस्थितिसंहारादिकर्तृत्वेन च कीर्तितस्सः। एवं विधि-शिव-इन्द्रादिभिः देवैः स्वस्वविपत्तिनिवारणाय सेव्यमानत्वेन च पुराणादिषु प्रतिपादितः। अथ ते देवाः स्वस्वासाधारणेन केनचित् प्रकारेण स्वेतरानतिशेरते। भगवांस्तु स्वरूप-गुण-विभूत्यादिना सर्वप्रकारेण सर्वानतिशेते, इतीदं तस्य यत् परमत्वं; हे देवि! लोकजननि! पूर्वोक्तप्रभावशालिनोऽपि तस्य तत् वैभवं, तदीयवक्षसि नित्यं भवत्याः कृतविहारायाः श्रीपादपद्मगतलाक्षा-रसस्पर्शस्य फलमेव। अन्यथा नेदृशं वैभवं तस्मिन् प्रसिध्येदिति सारम्॥

श्लो— करे नरपुरस्सरे सति कलौ कथंचित् धनी
ददाति गलहस्तिकां कुटिलवाक्यघोराकृतिम्।
न बन्धुजनतापि तं क्षुदभितापितं वीक्षते,
त्वदीक्षणपराङ्मुखः कथमिवांब! जीवेज्जनः? (26)

याञ्चार्थं हस्तप्रसारणमपि विविधावमाननाहेतुरित्याह "करे" इति । हे मातः ! त्वत्कटाक्षस्य अनास्पदं यो जनः, स जगति कथं जीविष्यति ? यतो हि दीन स्सः स्वबन्धुजनेन क्लेशितः क्षुधा च परिपीडितः सन् धनिनां गृहेषु भिक्षामटन् करं पुरतः प्रसारयति देहीति याचमानः । मरणे यानि चिह्नानि—तानि चिह्नानि याचके" इति रीत्या अर्धमरणावस्थामिव अनुभवतः तस्य विषये पापिनि कलौ को हि दयेत ? प्रत्युत द्वारि तिष्ठन्तमेव तं धनी परुषोक्तीर्भाषमाणः रौद्रमुखश्च गले हस्तं विन्यस्य बहिर्निस्सारयति । न तन्मुखवीक्षणमपि सहेत धनमत्तः । एवं प्रत्यहं प्रतिगृहं विमाननामेव भजतोऽस्य दीनस्य को वा जीवनोपायः ? ईदृशीं दुर्दशां मयि निरसितुं अनुग्रहपरा भवेति हार्दम् ॥

श्लो—

सायं प्रातः प्रतिदिनमये ! पुण्डरीकाक्षकान्ते !
कान्ता दैन्यात् मम धुरि सुतान् दर्शयन्ती क्षुधार्तान् ।
जीर्णं वासो ग्रथितकुटिलग्रन्थिजालं वसाना
तिष्ठत्यग्रे नतमुखममुं नेक्षसे मां किमर्थम् ? (27)

दयनीयताहेतुं स्वदीनावस्थां देव्यै निवेदयति "सायं प्रात"रिति । "पुण्डरीकाक्ष" इति भगवतो नारायणस्यैव असाधारणवृत्तिकं नाम । सूर्यमण्डलान्तर्वर्तिनो भगवतो रूपं निब्रुवती छान्दोग्यश्रुतिरियं "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी"...इत्यादिका अत्र प्रमाणम् । अत्र "अक्षिणी" इति द्विवचनमेव त्र्यक्षं अष्टाक्षं सहस्राक्षं च व्यावर्तयतीति स्वारस्यविदः । तस्य पुण्डरीकाक्षस्य दयिते ! हे श्रीदेवि ! मम गृहे अश्रान्तकलहं नाम इमं दुर्योगं श्रृणु । मम भार्या मयि भर्तृशब्दव्युत्पत्तिलभ्यमर्थं आक्षिपन्तीव बुभुक्षापीडितान् रुदतः सुतान् ममाग्रे आनीय दर्शयति । स्वयं च बहुसुषिरतया तन्तुस्यूतं पटच्चरं धरन्ती मूर्तिमदिव दारिद्र्यं, पुरस्तान्मम तिष्ठन्ती "पुत्राणां मम च अन्नवस्त्रलोपः त्वत्त एव" इति आक्रोशति । एवं तया क्षिप्यमाणोऽहं ह्रिया अवाङ्मुखः त्वदग्रे शोचामि दुर्विधः । करुणार्द्रहृदया त्वं दारिद्र्यध्वंसिभिः कटाक्षैः कुतो मां अद्यापि न शिशिरयसि ?—श्लोके "धुरि अग्रे" इति पदद्वयं "मम धुरि तिष्ठती"ति, "त्वदग्रे नतमुख"मिति च [illegible]वाक्ययोरन्वेति ॥

श्लो– पतिस्तव यदा रमे ! समभजद्व्रती वर्णितां
तदैव बत याचको बलिगृहप्रतोल्यामभूत् ।
कृताञ्जलिरहं ततः सविनयं मुहुः प्रार्थये
कदापि शरणागतं करुणयाम्ब ! मां मा त्यज ।। (28)

महतामपि अवमाननां ददती याचकता मयि कदापि मा भूदिति प्रार्थयते "पतिस्तवे"ति । यदा तव पतिस्सन्नपि हरिः लीलार्थमिव किंचित्कालावधि बलिनिग्रहाय वटुरूपमास्थाय स्त्रीपराङ्मुखत्वादिब्रह्मचारिव्रतविशेषान् आललंबे, तदैव हन्त ! आरोपितेनापि त्वत्पराङ्मुखत्वसूचकेन वटुत्वेन हेतुना बलिगृहप्रांगणें याचकतां प्रापत् । एवं तस्यापि ईदृशी लघ्वी दुस्स्थतिरिति स्थिते, किं वाच्यमस्मादृशान् प्रति ? अतस्सांजलिबन्धमहं भवतीं प्रार्थये । मां दयस्व । मा च कदापि मां त्वत्सान्निध्यात् दूरीकुरु । एवं च याचकतामहं नैव विन्देयमिति भावः ।।—

श्लो– याञ्च्यावृत्तिर्जगति बहुशो गर्हिता सत्समाजे
ह्रस्वीचक्रे परमपुरुषं चापि नारायणं या ।
तादृग्वृत्त्या प्रमुषितमतिः त्यक्तसर्वाभिमानो
जीवाम्यम्ब ! प्रहिणु करुणावृत्तिमस्मिन् प्रसीद ।। (29)

याञ्चाया निहीनतामुपपाद्य, स्वस्मिन् तन्निवृत्तिमाकांक्षति 'याञ्चावृत्ति" रिति । "दातुर्जिता कीर्तिरयाचकेन" इति चतुर्वर्गसंग्रहे क्षेमेन्द्रः । कुलीन विद्वदाद्यपेक्षया दाता उत्तमत्वेन परिगणितः । तदपेक्षयापि अयाचकः उत्तमः इति प्रशस्यते क्षेमेन्द्रेण । एवं नैषधे श्रीहर्षोऽपि 'त्यजन्त्यसून् शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम्" इति अयाचनव्रतं प्रशंसति । इत्थं च व्रतमिव ध्रियमाणं अयाचकत्वं यथा सर्वोत्तममिति सतां समाजे प्रशंसितं, तथा याञ्चावृत्तिरपि सर्वनिन्दितत्वेन प्रसिद्धा जगति । पुरुषोत्तमोऽपि नारायणो याञ्चाप्रभावादेव हि ह्रस्वाकृतिं प्राप्तः । आजन्मनः तथैव निहीनया वृत्त्या अटाट्यमानस्य विविधदुर्वचावमानैर- वसीदतः गलितविवेकस्य विमुक्तात्माभिमानस्य च मे हे अम्ब ! त्वत्क- रूणाप्रसारमन्तरेण नोज्जीवनोपायः । अतस्त्वं मयि प्रसन्ना भव ।।—

श्लो–
कुचेलमपि दुर्गतं पृथुकपालनैर्व्याकुलं
ररक्षिथ कटाक्षतः क्षपितरूक्षदैन्यं क्षणात् ।
अहं च मधुसूदनप्रियतमे ! रमे ! तादृशः
तदद्य कृपया मयि प्रहिणु तादृशं वीक्षणम् ॥ (३०)

अन्ते कुचेलवत् आत्मनोऽपि रक्षणमपेक्षते "कुचेलमपि" इति । हे विष्णुपत्नि ! श्रीः ! यः दारिद्र्यस्य अधिकसन्ततेश्च निदर्शनतया ख्यातः नाम्ना "सुदामा"पि "कुचेल" इति दारिद्र्यनिरूपिकामभिख्यां बिभ्रत् पृथुकानां-स्वपुत्राणां क्षुधार्तानां पालनेऽपि विकलमनस्कः,-यद्वा "पृथुकौ चिपिटार्भकौ" इति नानार्थवर्गानुसारेण श्रीकृष्णाय उपायनत्वेन दित्सितानां पृथुकानां-चिपिटकानां जीर्णग्रन्थिलस्ववस्त्रदशान्ते आबन्धनेन रक्षितुमपि व्याकुलमनस्कः; तं द्विजवरं कृष्णसखं क्षणादेव दारिद्र्यबाधां-क्षपयित्वा पुष्कलैश्वर्यदानेन कृपाशिशिरं कटाक्षं प्रसार्य त्वमेव हि अपालयः । तथा अहमपि सर्वात्मना तत्तुल्य इति हेतोः मय्यपि त्वत्पादयोः प्रणते तत्तुल्यमेव सम्पत्प्रदं दारिद्र्यतापापहं च कटाक्षं प्रहिणु । येनाहं तद्वत् निराकुलो भवेयमिति भावः ॥

श्लो–
यः पठति प्रतिदिवसं लक्ष्मीस्तुतिमंजरीमिमाममलाम् ।
मन्दाक्रान्तां पृथ्वीं चिरमनुभवति प्रभुस्स जगतीह ॥ (३१)

अथ फलश्रुत्या स्तुतिं निगमयति "यः पठती"ति ॥ स्तुतिरियं शब्दतोऽर्थतश्च निर्दुष्टा । तथा मंगलदेवताविषयकत्वाच्च । ईदृशीमेनां लक्ष्मीस्तुतिमंजरीं प्रतिदिनं अनुसन्दधानस्य फलमुच्यते "मन्दाक्रान्तां पृथ्वीं" इत्यादिना । क्रमेण सम्पदभिवृद्ध्या विश्वम्भराधिपत्यमाक्रामति, सुखं चाधिगच्छति स इति भावः । अत्र श्लेषेण मुद्रालंकारनयात् स्तुतावस्यां आदौ मन्दाक्रान्तावृत्तं, ततः पृथ्वीवृत्तं, पुनः मन्दाक्रान्ता, पुनः पृथ्वी, इति वृत्तद्वयमेव क्रमविन्यासेन आदृतमिति कविना सूच्यते ।

श्लो–
लक्ष्मीकटाक्षसिद्ध्यर्थं भक्त्या लक्ष्मीस्तवस्रजम् ।
अर्पयामास तत्पादे जानकीकुलभूषणः ॥ (३२)

-कविः स्वकृतिं मालामिव भक्त्या देवीपादाब्जसन्निधावर्पयति "लक्ष्मी-
-कटाक्षे"ति स्पष्टोऽर्थः ॥—

इति विवृतिमिमां विदग्धहृद्यां
इह रघुनाथबुधो व्यधत्त हृष्टः ।
रसिकजनमनोविनोदनार्थं
प्रणय'ता कविना मुदा नुशिष्टः ॥

—----